# श्रीदेवी खड्गमालास्तोत्ररत्नम्

## प्रार्थना

ह्रीङ्काराननगर्भितानलशिखां सौः क्लीङ्कलां बिभ्रतीं
सौवर्णाम्बरधारिणीं वरसुधाधौतां त्रिनेत्रोज्ज्वलाम् ।
वन्दे पुस्तकपाशमङ्कुशधरां स्रग्भूषितामुज्ज्वलां
त्वां गौरीं त्रिपुरां परात्परकलां श्रीचक्रसञ्चारिणीम् ॥

अस्य श्रीशुद्धशक्तिमालामहामन्त्रस्य, उपस्थेन्द्रियाधिष्ठायी वरुणादित्य ऋषिः देवी गायत्री छन्दः सात्विक ककारभट्टारकपीठस्थित कामेश्वराङ्कनिलया महाकामेश्वरी श्री ललिता भट्टारिका देवता, ऐं बीजं क्लीं शक्तिः, सौः कीलकं मम खड्गसिद्ध्यर्थे सर्वाभीष्टसिद्ध्यर्थे जपे विनियोगः, मूलमन्त्रेण षडङ्गन्यासं कुर्यात् ॥

## ध्यानम्

तादृशं खड्गमाप्नोति येन हस्तस्थितेनवै
अष्टादशमहाद्वीपसम्राड्भोक्ताभविष्यति

आरक्ताभांत्रिनेत्रामरुणिमवसनां रत्नताटङ्करम्यां
हस्ताम्भोजैस्सपाशाङ्कुशमदनधनुस्सायकैर्विस्फुरन्तीम् ।
आपीनोत्तुङ्गवक्षो रुहकलशलुठत्तारहारोज्ज्वलाङ्गीं
ध्यायेदम्भोरुहस्थामरुणिमवसनामीश्वरीमीश्वराणाम् ॥

लमित्यादिपञ्च पूजां कुर्यात्, यथाशक्ति मूलमन्त्रं जपेत् ।

लं - पृथिवीतत्त्वात्मिकायै श्रीललितात्रिपुरसुन्दरी पराभट्टारिकायै गन्धं परिकल्पयामि - नमः
हं - आकाशतत्त्वात्मिकायै श्रीललितात्रिपुरसुन्दरी पराभट्टारिकायै पुष्पं परिकल्पयामि - नमः
यं - वायुतत्त्वात्मिकायै श्रीललितात्रिपुरसुन्दरी पराभट्टारिकायै धूपं परिकल्पयामि - नमः
रं - तेजस्तत्त्वात्मिकायै श्रीललितात्रिपुरसुन्दरी पराभट्टारिकायै दीपं परिकल्पयामि - नमः
वं - अमृततत्त्वात्मिकायै श्रीललितात्रिपुरसुन्दरी पराभट्टारिकायै अमृतनैवेद्यं परिकल्पयामि - नमः
सं - सर्वतत्त्वात्मिकायै श्रीललितात्रिपुरसुन्दरी पराभट्टारिकायै ताम्बूलादिसर्वोपचारान् परिकल्पयामि - नमः

श्रीदेवी सम्बोधनं - १
ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ नमस्त्रिपुरसुन्दरि,

न्यासाङ्गदेवताः -६
हृदयदेवि, शिरोदेवि, शिखादेवि, कवचदेवि, नेत्रदेवि,
अस्त्रदेवि,

तिथिनित्यादेवताः -१६
कामेश्वरि, भगमालिनि, नित्यक्लिन्ने, भेरुण्डे, वह्निवासिनि,
महावज्रेश्वरि, शिवदूति, त्वरिते, कुलसुन्दरि, नित्ये,
नीलपताके, विजये, सर्वमङ्गले, ज्वालामालिनि, चित्रे,
महानित्ये,

दिव्यौघगुरवः -७
परमेश्वरपरमेश्वरि, मित्रेशमयि, षष्ठीशमयि, उड्डीशमयि,
चर्यानाथमयि, लोपामुद्रामयि, अगस्त्यमयि,

सिद्धौघगुरवः -४
कालतापशमयि, धर्माचार्यमयि, मुक्तकेशीश्वरमयि, दीपकलानाथमयि,

मानवौघगुरवः -८
विष्णुदेवमयि, प्रभाकरदेवमयि, तेजोदेवमयि, मनोजदेवमयि,
कल्याणदेवमयि, वासुदेवमयि, रत्नदेवमयि, श्रीरामानन्दमयि,

श्रीचक्र प्रथमावरणदेवताः -३२
अणिमासिद्धे, लघिमासिद्धे, गरिमासिद्धे, महिमासिद्धे,
ईशित्वसिद्धे, वशित्वसिद्धे, प्राकाम्यसिद्धे, भुक्तिसिद्धे,
इच्छासिद्धे, प्राप्तिसिद्धे, सर्वकामसिद्धे, ब्राह्मि,
माहेश्वरि, कौमारि, वैष्णवि, वाराहि, माहेन्द्रि, चामुण्डे,
महालक्ष्मि, सर्वसङ्क्षोभिणि, सर्वविद्राविणि, सर्वाकर्षिणि,
सर्ववशङ्करि, सर्वोन्मादिनि, सर्वमहाङ्कुशे, सर्वखेचरि,
सर्वबीजे, सर्वयोने, सर्वत्रिखण्डे, त्रैलोक्यमोहन
चक्रस्वामिनि, प्रकटयोगिनि,

श्रीचक्र द्वितीयावरणदेवताः -१८
कामाकर्षिणि, बुद्ध्याकर्षिणि, अहंकाराकर्षिणि, शब्दाकर्षिणि,
स्पर्शाकर्षिणि, रूपाकर्षिणि, रसाकर्षिणि, गन्धाकर्षिणि,
चित्ताकर्षिणि, धैर्याकर्षिणि, स्मृत्याकर्षिणि, नामाकर्षिणि,

बीजाकर्षिणि, आत्माकर्षिणि, अमृताकर्षिणि, शरीराकर्षिणि,
सर्वाशापरिपूरकचक्रस्वामिनि, गुप्तयोगिनि,

श्रीचक्र तृतीयावरणदेवताः -१०
अनङ्गकुसुमे, अनङ्गमेखले, अनङ्गमदने, अनङ्गमदनातुरे,
अनङ्गरेखे, अनङ्गवेगिनि, अनङ्गाङ्कुशे, अनङ्गमालिनि,
सर्वसङ्क्षोभणचक्रस्वामिनि, गुप्ततरयोगिनि,

श्रीचक्र चतुर्थावरणदेवताः -१६
सर्वसङ्क्षोभिणि, सर्वविद्राविनि, सर्वाकर्षिणि,
सर्वह्लादिनि, सर्वसम्मोहिनि, सर्वस्तम्भिनि, सर्वजृम्भिणि,
सर्ववशङ्करि, सर्वरञ्जनि, सर्वोन्मादिनि, सर्वार्थसाधिके,
सर्वसम्पत्तिपूरिणि, सर्वमन्त्रमयि, सर्वद्वन्द्वक्षयङ्करि,
सर्वसौभाग्यदायकचक्रस्वामिनि, सम्प्रदाययोगिनि,

श्रीचक्र पञ्चमावरणदेवताः -१२
सर्वसिद्धिप्रदे, सर्वसम्पत्प्रदे, सर्वप्रियङ्करि,
सर्वमङ्गलकारिणि, सर्वकामप्रदे, सर्वदुःखविमोचनि,
सर्वमृत्युप्रशमनि, सर्वविघ्ननिवारिणि, सर्वाङ्गसुन्दरि,
सर्वसौभाग्यदायिनि, सर्वार्थसाधकचक्रस्वामिनि,
कुलोत्तीर्णयोगिनि,

श्रीचक्र षष्ठावरणदेवताः -१२
सर्वज्ञे, सर्वशक्ते, सर्वैश्वर्यप्रदायिनि, सर्वज्ञानमयि,
सर्वव्याधिविनाशिनि, सर्वाधारस्वरूपे, सर्वपापहरे,
सर्वानन्दमयी, सर्वरक्षास्वरूपिणि, सर्वेप्सितफलप्रदे,
सर्वरक्षाकरचक्रस्वामिनि, निगर्भयोगिनि,

श्रीचक्र सप्तमावरणदेवताः -१०
वशिनि, कामेश्वरि, मोदिनि, विमले, अरुणे, जयिनि,
सर्वेश्वरि, कौलिनि, सर्वरोगहरचक्रस्वामिनि,
रहस्ययोगिनि,

श्रीचक्र अष्टमावरणदेवताः -९
बाणिनि, चापिनि, पाशिनि, अङ्कुशिनि, महाकामेश्वरि,
महावज्रेश्वरि, महाभगमालिनि, सर्वसिद्धिप्रदचक्रस्वामिनि,
अतिरहस्ययोगिनि,

श्रीचक्र नवमावरणदेवताः -३
श्री श्रीमहाभट्टारिके, सर्वानन्दमयचक्रस्वामिनि,
परापरातिरहस्ययोगिनि,

नवचक्रेश्वरी नामानि -९
त्रिपुरे, त्रिपुरेशि, त्रिपुरसुन्दरि, त्रिपुरवासिनि,
त्रिपुराश्रीः, त्रिपुरमालिनि, त्रिपुरासिद्धे, त्रिपुराम्ब,
महात्रिपुरसुन्दरि,

श्रीदेवी विशेषणानि - नमस्कारनवाक्षरीच -९
महामहेश्वरि, महामहाराज्ञि, महामहाशक्ते, महामहागुप्ते,
महामहाज्ञप्ते, महामहानन्दे, महामहास्कन्धे, महामहाशये,
महामहा श्रीचक्रनगरसाम्राज्ञि, नमस्ते नमस्ते नमस्ते नमः ।

फलश्रुतिः
एषा विद्या महासिद्धिदायिनी स्मृतिमात्रतः ।
अग्निवातमहाक्षोभे राजाराष्ट्रस्य विप्लवे ॥

लुण्ठने तस्करभये सङ्ग्रामे सलिलप्लवे ।
समुद्रयानविक्षोभे भूतप्रेतादिके भये ॥

अपस्मारज्वरव्याधिमृत्युक्षामादिजे भये ।
शाकिनी पूतनायक्षरक्षःकूष्माण्डजे भये ॥

मित्रभेदे ग्रहभये व्यसनेष्वाभिचारिके ।
अन्येष्वपि च दोषेषु मालामन्त्रं स्मरेन्नरः ॥

सर्वोपद्रवनिर्मुक्तस्साक्षाच्छिवमयोभवेत् ।
आपत्काले नित्यपूजां विस्तारात्कर्तुमारभेत् ॥

एकवारं जपध्यानं सर्वपूजाफलं लभेत् ।
नवावर्णदेवीनां ललिताया महौजसः ॥

एकत्र गणनारूपो वेदवेदाङ्गगोचरः ।
सर्वागमरहस्यार्थः स्मरणात्पापनाशिनी ॥

ललिताया महेशान्या माला विद्या महीयसि ।
नरवश्यं नरेन्द्राणां वश्यं नारीवशङ्करम् ॥

अणिमादिगुणैश्वर्यं रञ्जनं पापभञ्जनम् ।
तत्तदावरणस्थायि देवतावृन्दमन्त्रकम् ॥

मालामन्त्रं परं गुह्यं परं धामप्रकीर्तितम् ।
शक्तिमाला पञ्चधा स्याच्छिवमाला च तादृशी ॥

तस्माद्गोप्यतराद्गोप्यं रहस्यं भुक्तिमुक्तिदम् ॥

इति श्रीवामकेश्वरतन्त्रे उमामहेश्वरसंवादे
देवीखड्गमालास्तोत्ररत्नं समाप्तम् ।